विमलादिवचनं । यत अविरोधोऽपि तव मतं न बाध्यते प्रसिद्धेन यस्मात् ।
ननु भो भगवन् भवदीयं मतं न बाध्यते अन्येषां किं बाध्यते ? अत आह—

त्वन्मतामृतबाह्यानां सर्वथैकान्तवादिनाम् ।
आप्ताभिमानदग्धानां स्वेष्टं दृष्टेन बाध्यते ॥ ७ ॥

वृत्ति—त्वदुक्तमतमेव आगम एव अमृतं सर्वात्मप्रदेशाह्लादकारणं दुःखनिवृत्तिलक्षणस्य परमानन्दमुक्तिसुखस्य निमित्तं वा मतं अमृतं तस्माद् बाह्या बहिर्भूता मिथ्यादृष्टयः त्वन्मतामृतबाह्याः. तेषां त्वन्मतामृतबाह्यानां दुष्पक्षलम्बिनां । सर्वथा सर्वप्रकारैः स्वरूपपररूपविधिप्रतिषेधात्मके ऽनेकान्ते एकं धर्मं नित्यत्वादिकमेव गृहीत्वा शीलं येषां ते सर्वथैकान्तवादिनः तेषां सर्वथैकान्तवादिनां स्याद्वादमार्गानुपपन्नानाम् । आप्ता सर्वज्ञा इति अभिमानः गर्वः अहङ्कारः तेन दग्धाः भस्मसात्कृताः भस्मत्वं नीताः तेषां आप्ताभिमानदग्धानाम् । स्वस्य आत्मन इष्टं मतं स्वेष्टं भावाभावाद्युपाय-प्रमाणफलं सर्ववस्तु । दृष्टेन प्रत्यक्षेण प्रत्यक्षप्रमितेन अनेकान्तात्मवस्तुना वा । बाध्यते विरोधमुपनीयते अन्यथा क्रियते इत्यर्थः ॥ विशुद्धं भवति ॥ भगवन्नागमबाह्या आप्ताभिमानदग्धाः सर्वथैकान्तवादिनः तेषां स्वेष्टं दृष्टेन बाध्यते । पर्वताग्निमत्वनिराकार्यं अन्वयव्यतिरेकानुपलम्भार्थं ॥ द्रव्यार्थिकपर्यायार्थिकानुग्रहार्थं वा ॥

परवादिस्वेष्टस्य दृष्टेन बाधां प्रदर्श्य इदानीं स्वेष्टेन स्वेष्टस्य बाधां दर्शयितुमाह—

कुशलाकुशलं कर्म परलोकश्च न क्वचित् ।
एकान्तग्रहरक्तेषु नाथ स्वपरवैरिषु ॥ ८ ॥

वृत्ति—कुशलं शुभनिमित्तं, अकुशलं दुःखनिमित्तं, कर्म मिथ्यात्वा-संयमकषाययोगकारणोपार्जितपुद्गलप्रचयः । कुशलं चाकुशलं च कुशला-कुशलं कर्म शुभाशुभमित्यर्थः । परलोको भवान्तरगतिरित्यर्थः । च-शब्दोऽनुक्तसमुच्चयार्थः । तेन तत्फलभूतमोक्षेहलोकादयो गृह्यन्ते । न

वर्जितं सर्वमसकलं भवति । अनन्तानामाकारे पुनर्न्वयेन सर्वप्रकारेणैवो-ड्येत । ततो न किंचित्स्यात् ॥

भावैकान्तपक्षे कुशलाकुशलकर्मादिघटनां प्रदर्श्य अभावैकान्तपक्षेऽपि सर्वं न घटतेति प्रदर्शयन्नाह—

**अभावैकान्तपक्षेऽपि भावापह्नववादिनाम् ।**
**बोधवाक्यं प्रमाणं न केन साधनदूषणम् ॥ १२ ॥**

वृत्तिः—अभाव इति असदिति एकान्तो मिथ्याभिप्रायोऽभावैकान्तः । स एव पक्षोऽभ्युपगमस्तस्मिन्नप्यभावैकान्तपक्षेऽपि । न केवलं भावैकान्ते, किं त्वभावैकान्तेऽपि भावस्य सत्त्वस्य आत्मनः अभावो निराकरणं तं वदितुं शीलं येषां ते तथाभूतास्तेषां भावापह्नववादिनाम् । बोधो ज्ञानं स्वार्थानुमानं, वाक्यं आगमः परार्थानुमानम् । बोधश्च वाक्यं च बोधवाक्यम् । प्रमीयतेऽनेनेति प्रमाणं स्वपरावभासकं ज्ञानम् । न प्रतिषेधवचनम् । केन करणेन । साधनं च दूषणं च साधनदूषणं द्वन्द्वैकवद्भावः । स्वपक्षसिद्धिः परपक्षनिराकरणं । भावापह्नववादिनामभावैकान्ते बोधवाक्ययोरप्यभावत्वतः प्रमाणाभावात् केन साधनं केन वा दूषणं क्रियत इति सम्बन्धः ॥

भावाभावैकान्ते विरोधं निरूप्योभयैकान्तवादिनामपि न किंचिद्घटत इत्याह—

**विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।**
**अवाच्यतैकान्तेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ १२ ॥**

वृत्तिः—विरोधाद्व्यभिचारात् पूर्वापरासङ्गतत्वात् । न प्रतिषेधवचनम् । एक आत्मा स्वभावो ययोस्तौ तथा तयोर्भावस्तदैकात्म्यम् । उभयोः सत्त्वासत्त्वयोरैकात्म्यमुभयैकात्म्यं भावाभावैकात्म्यमित्यर्थः । न्यायो युक्तिः प्रमाणेन प्रमेयस्य घटना । स्याद्वाद एव न्यायः स्याद्वादन्यायस्तं ये विद्विषन्ति वा विद्विषन्तीति स्याद्वादन्यायविद्विषस्तेषां स्याद्वादन्यायविद्विषामनेकान्तवैरिणाम् । अथ भावाभावोभयैकान्तपक्षदोषदर्शनादवाच्यतैकान्त आश्रीयते तथापि दोष एवेत्याह । उच्यत इति वाच्यं न वाच्यमवाच्यं तस्य भावोऽवाच्यता

लोकः परलोको ज्ञानमज्ञानं बन्धो मोक्षश्च जीवप्रदेशकर्मप्रदेशान्योन्यप्रवेशो बन्धः अष्टविधकर्ममोक्षो मोक्ष इत्येवमादि न स्यात् ॥

प्रमाणादद्वैतं निराकर्तुमाह—

हेतोरद्वैतसिद्धिश्चेद्द्वैतं स्याद्धेतुसाध्ययोः ।
हेतुना चेद्विना सिद्धिर्द्वैतं वाङ्मात्रतो न किम् ॥ २६ ॥

वृत्तिः—अद्वैतस्य सिद्धिः किं हेतोरागमादेरनुमानात्? यदि हेतोरिदं साधनमिदं साध्यमिति द्वैतं स्यात् ॥ साधनमन्तरेणाद्वैतस्य सिद्धिश्चेद्द्वैतं वचनमात्रेण कस्मान्न स्यादिति समानम् ॥

पुनरप्यद्वैतं निराकर्तुमाह—

अद्वैतं न विना द्वैतादहेतुरिव हेतुना ।
संज्ञिनः प्रतिषेधो न प्रतिषेध्यादृते क्वचित् ॥ २७ ॥

वृत्तिः—द्वैताद्विना न भवत्यद्वैतम् । यथा अहेतुर्हेतुमन्तरेण न भवति ॥ संज्ञिनो नामवतः प्रतिषेध्यमन्तरेण प्रतिषेधो यस्मात् क्वचिदपि न भवति ॥ यो यः संज्ञी तस्य तस्य प्रतिषेध्यमन्तरेण प्रतिषेधो न भवति । यथा कुसुममन्तरेणाकाशादौ कुसुमस्य । संज्ञि चाद्वैतं तस्माद्द्वैतेन विना प्रतिषेधो न भवति ॥

अधुना सर्वथानेकपदार्थपृथक्त्वैकान्तवादिवैशेषिकादिमतदूषणार्थमाह—

पृथक्त्वैकान्तपक्षेऽपि पृथक्त्वादपृथक्कृतौ ।
पृथक्त्वे न पृथक्त्वं स्यादनेकस्थो ह्यसौ गुणः ॥ २८ ॥

वृत्तिः—यद्यप्यद्वैतैकान्तपक्षे दोषसद्भावात् पृथक्त्वमित्येकान्तपक्षोऽभ्युपगम्यते तथापि पृथक्त्वगुणात्तावदपृथग्भूतावभ्युपगन्तव्यौ गुणगुण्यादी । अन्यथा तस्मादपि यदि तौ पृथग्भूतौ स्यातां तदानीं पृथक्त्वाख्यो गुणो न स्यात् । कुतः । यतोऽनेकस्थो ह्यसौ गुणो दृष्ट इत्यर्थः ॥ न च तयोः पृथक्त्वगुणः पृथग्गतिः सर्वेषामभावः स्यात् । तस्माद् भेदपक्षोऽपि न श्रेयान् ॥

इदानीं पृथक्त्वैकान्तवादिविशेषमाश्रित्य क्षणिकत्वैकान्तदूषणार्थमाह—

अत आह । सामान्यं विकल्पेनेष्टोऽर्थो वाच्यो यासां ताः सामान्यार्थाः । गिरो वाचः अन्येषां मिथ्यादृशां । यतस्ताभिर्विशेषो याथात्म्य स्वलक्षणं नाभिलप्यते यद्येवं सामान्यं तेषामवस्तु अतस्तस्याभावात्सकलाः समस्ता गिरो वचनानि मृषैवासत्यरूपा एव अतो न वाच्यम् नापि वाचकोऽनुमानाभावः ( ? )

उभयैकान्तं निराकर्तुकामः प्राह—

विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।
अवाच्यतैकान्तेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ३२ ॥

वृत्तिः—अथ मतं यद्येकैके दोष उभयैकात्म्यमेषितव्यमिति दूषणमाह । एकत्वपृथक्त्वपरप्रत्यनीकस्वभावद्वयसम्भवोऽपि न सम्भवति अस्तित्वनास्तित्ववत् प्रतिषेधात् । एकैकस्य निराकृतत्वात् ॥ अथावाच्यमिष्यते तदपि न । अवाच्यत्वे येयमुक्तिः साऽपि न सम्भवति मिथ्यादृशाम् ॥

सामान्यविशेषौ परस्परानपेक्षावभ्युपगतौ निरस्य तौ सापेक्षौ सन्तावर्थक्रियां कुरुत इत्यस्यार्थस्य प्रतिपादनार्थमाह—

अनपेक्षे पृथक्त्वैक्ये ह्यवस्तुद्वयहेतुतः ।
तदेवैक्यं पृथक्त्वं च स्वभेदैः साधनं यथा ॥ ३३ ॥

वृत्तिः—परस्परानपेक्षे पृथक्त्वैक्ये सामान्यविशेषाववस्तु अर्थक्रियाकारि न भवति द्वयहेतोर्द्वाभ्यां । कथं यद्विशेषशून्यं तन्नास्ति यथा खरविषाणं सामान्यं च तथा परपरिकल्पितं । तस्मान्नास्ति विशेषः सामान्यशून्यत्वात् । खरविषाणविशेषवदित्यनेन हेतुद्वयेन सामान्यविशेषयोरवस्तुत्वं साधनीयम् । तदेव वस्तु । ऐक्यं सामान्यं विशेषश्च पृथक्त्वं च द्वयात्मकं कुतोऽविरोधात् । यथा साधनहेतुज्ञानं वाक्यं वा स्वभेदैः स्वधर्मैः पक्षधर्मान्वयव्यतिरेकादिभिर्भिन्नमेकं भवति ॥

ननु तदेवैक्यं पृथक्त्वं च कथं यावता विरुद्धमेतत्,—

सत्सामान्यात्तु सर्वैक्यं पृथक् द्रव्यादिभेदतः ।
भेदाभेदविवक्षायामसाधारणहेतुवत् ॥ ३४ ॥

अवक्तव्यचतुष्कोटिविकल्पोऽपि न कथ्यताम् ।
असर्वान्तमवस्तु स्यादविशेष्यविशेषणम् ॥ ४६ ॥

वृत्तिः— अवक्तव्यचतुष्कोटिविकल्पोऽपि यः सोऽपि न कथ्यतां नोच्यतां मामाणीदित्यर्थः । अन्यथा भेदाभेदोभयानुभयस्वरूपेणाभिलप्यते कथंचिदनभिलप्यश्च स्यात् ॥ अन्यथैवं सति असर्वान्तं सर्वविकल्पातीतमवस्तु स्यात् । विशेष्यत इति विशेष्योऽनेनेति विशेषणं तयोरभावात् ॥

अन्यच्च प्रतिषेधोऽपि न घटते, तत्कथनायाह—

द्रव्याद्यन्तरभावेन निषेधः संज्ञिनः सतः ।
असद्भेदो न भावस्तु स्थानं विधिनिषेधयोः ॥ ४७ ॥

वृत्तिः—द्रव्यादिविशेषैः स्वद्रव्यक्षेत्रकालभावानन्योऽन्यानि द्रव्याद्यन्तराणि तेषामभावस्तेन परद्रव्यपरक्षेत्रपरकालपरभावस्वरूपेण यः प्रतिषेधः सतो विद्यमानस्य । संज्ञिनो आत्मनो भवति । यः पुनरसद्भेदो भावविशेषः परपरिकल्पितो नासौ भावः खपुष्पं । विधिनिषेधयोरस्तित्वनास्तित्वयोः स्थानमास्पदं । कुतः सर्वथा तस्य तुच्छत्वात् । तस्मात्सत एव विधिनिषेधयोरवस्था तस्यैव स्वपररूपेणास्तित्वनास्तित्वम् ॥

यतः—

अवस्त्वनभिलाप्यं स्यात् सर्वान्तैः परिवर्जितम् ।
वस्त्वेवावस्तुतां याति प्रक्रियाया विपर्ययात् ॥ ४८ ॥

वृत्तिः— सर्वान्तैः सर्वधर्मैः । परिवर्जितं विरहितं । सर्वथा यत्तदनभिलाप्यमवाच्यं वस्तु स्यात् न किंचिदपि भवेत् परपरिकल्पितं । एवं सकलवस्तुलक्षणमाह—वस्त्वेवावस्तुतां याति प्रक्रियायाः । सर्व एव पदार्थो भवति कुतः प्रक्रियायाः स्वरूपादिचतुष्टयलक्षणायाः । विपर्ययात्पररूपादिचतुष्टयात् । तस्मादवस्तु तदनभिलाप्यं यथा न किंचित् । यत्पुनरभिलाप्यं तदवस्तु यथा खपुष्पं । तस्मादेतद्देवैकस्योपलब्धेरन्यस्यानुपलब्धेरिति ॥

पुनरप्यवक्तव्यवादिनमुपालभते—

कथं य एवोत्पादः स एव विनाशो यावेव विनाशोत्पादौ तावेव स्थिति- रित्यत आह—

कार्योत्पादः क्षयो हेतोर्नियमाल्लक्षणात्पृथक् ।
न तौ जात्याद्यवस्थानादनपेक्षाः खपुष्पवत् ॥ ५८ ॥

वृत्तिः—योऽयं कार्यस्योत्पादः स एव हेतोरुपादानकारणस्य क्षयो विनाशो नियमान्निश्चयात् । लक्षणात्पुनः पृथग्भिन्नौ स्वरूपभेदात् । जात्यादेरवस्थाना- दसत्त्वप्रमेयत्वादिना न तौ भिन्नौ कुतश्चित्तेन रूपेणैकत्वात् । अनपेक्षाः परस्प- रापेक्षामन्तरेण ते स्थित्युत्पत्तिविनाशाः खपुष्पसमानाः । तस्मादेते कथञ्चित् परस्परमभिन्ना कथञ्चिद्भिन्नाश्च भवन्ति ॥

लौकिकदृष्टान्तेन स्पष्टयन्नाह—

घटमौलिसुवर्णार्थी नाशोत्पादस्थितिष्वयम् ।
शोकप्रमोदमाध्यस्थ्यं जनो याति सहेतुकम् ॥ ५९ ॥

वृत्तिः—अयं जनस्त्रियार्थी यो घटार्थी स तस्मिन् भग्ने शोकं याति । यश्च मौल्यर्थी स तस्मिन्नुत्पन्ने हर्षं याति । यश्च सुवर्णार्थी स माध्यस्थ्यं याति सुवर्णसद्भावात् । नचैतदहेतुकं किन्तु सहेतुकमेव । यदेव सुवर्णद्रव्यं घटस्वरूपेण विनश्यति तदेव मौलिस्वरूपेणोत्पद्यते सुवर्णस्वरूपेणानुगतैकाका- रस्वरूपेण तिष्ठति । एवं सर्वं वस्तु ॥

पुनरपि लोकोत्तरदृष्टान्तेन द्योतयन्ति—

पयोव्रतो न दध्यत्ति न पयोऽत्ति दधिव्रतः ।
अगोरसव्रतो नोभे तस्मात्तत्त्वं त्रयात्मकम् ॥ ६० ॥

वृत्तिः—यस्य पयो दुग्धमेवाहं भुञ्जे इति व्रतं नियमो नासौ दध्यत्ति दधि भुङ्क्ते । यस्य च दध्येव भुञ्जे इति व्रतं नासौ पयोऽत्ति दुग्धं भुङ्क्ते । यस्य चागोरसमहं भुञ्जे इति व्रतं नासावुभयमत्ति । कुतो गोरसरूपेण तयो- रेकत्वात् । दुग्धव्रतस्य दधिरूपेणाभावात् । दधिव्रतस्य पयोरूपेणाभावात् । अगोरसव्रतस्य दधिदुग्धरूपेणाभावात् । तस्मात्तत्त्वं वस्तु त्रयात्मकं स्थित्युत्प- त्तिव्ययात्मकं सुघटमेतदनेकान्ते जैनमते इति स्थितम् ॥

द्रव्यपर्याययोरैक्यं तयोरव्यतिरेकतः ।
परिणामविशेषाच्च शक्तिमच्छक्तिभावतः ॥ ७१ ॥

वृत्तिः—कारणं गुणी सामान्यं वस्तु द्रव्यमित्युच्यते, कार्यं गुणो विशेषः पर्याय इत्युच्यते, तयोरैक्यमेकत्वं कुतस्तयोरव्यतिरेकतो द्रव्यपर्याययोरव्यतिरेकोऽस्मात् । एतेनास्य हेतोरसिद्धत्वं प्रत्युक्तम् । परिणामः कारणस्यान्यथाभावः कार्यपर्यायोऽन्वितस्य विशेषश्च तस्मात्परिणामविशेषाच्च तयोरैक्यं । शक्तो विपन्ने यस्य शक्तिविहितं द्रव्यं परिणामि । प्रतिनियतकार्यसम्पादनसामर्थ्यविशेषाः शक्तयो यथा पदार्थे. शेषद्रव्यवदृश्यादय । तयोर्भावस्तस्मात् तयोरैक्यमिति सम्बन्धः ॥

कथञ्चिद्भेदनिरूपणार्थमाह—

संज्ञासंख्याविशेषाच्च स्वलक्षणविशेषतः ।
प्रयोजनादिभेदाच्च तन्नानात्वं न सर्वथा ॥ ७२ ॥

वृत्तिः—संज्ञा नाम, संख्या एकादिका, तयोर्विशेषो भेदस्तस्मात्तयो नानात्वं भेदो दृश्यते । न संज्ञाभेदः कथञ्चन वपुः मनः कामिनी योषित्-ती भार्या । द्वित्वादिकस्य संख्याभेदोऽपि प्रतीतः । स्वलक्षणं स्वरूपं स्वरूप यस्य स भावो विशेषस्तस्मात्प्रयोजनानात्वं । तथा च द्रव्येनान्यत्प्रयोजनं पर्यायैरन्यत् घटकपालवत् ॥

अपेक्षानपेक्षैकान्तप्रतिक्षेपार्थमाह—

यद्यापेक्षिकसिद्धिः स्यान्न द्वयं व्यवतिष्ठते ।
अनापेक्षिकसिद्धौ च न सामान्यविशेषता ॥ ७३ ॥

वृत्तिः—अत्रैव प्रयोजनभेदानयनाहेतोः सिद्धिरन्यापेक्षिकी । अथवाऽऽपेक्षिकी चार्थी सिद्धिः सा यदि स्यात् । कार्यकारणादि युगद्वयं न व्यवतिष्ठते न घटते । एकैकस्य प्रतिष्ठाभावात् ॥ यदि पुनरनापेक्षिकसिद्धिरेव स्यात्सामान्यं न विशेषश्च तयोरपि सामान्यविशेषता सा न स्यात् कथंचिद् । तस्मात्कथं कथमपि सिद्धेन भवितव्यम् ॥ धर्मिधर्मभावश्च परस्परापेक्षः ॥

वमप्रधानत्वेन विवक्षितं नात्यन्ताभावत्वेन । परस्परापेक्षयैव कार्यसिद्धिर्दतो देव आत्मा तस्य कर्म दैवमिति ॥

ननु परदुःखे पापं तस्यैव सुखे पुण्यं स्वदुःखात्पुण्यं स्वसुखात्पापमित्येवं कैश्चिदभाणि न दैवादिति तन्मतनिराकरणायाह—

पापं ध्रुवं परे दुःखात् पुण्यं च सुखतो यदि ।
अचेतनाकषायौ च बध्येयातां निमित्ततः ॥ ९२ ॥

वृत्तिः—परेऽन्यस्मिन्प्राणिनि दुःखमात्राद्यदि पापं स्यात् । तस्मिन्नेव सुखमात्राच्च पुण्यं यदि स्यात्। तदानीमचेतनो विषशस्त्रादिरकषायो वीतरागः तावपि बध्येयाता कर्मबन्धस्य कर्तारौ भवतः। निमित्तत्वात् । प्रत्ययमन्तरेणापि भावप्रधानत्वान्निर्देशस्य ॥

तथा—

पुण्यं ध्रुवं स्वतो दुःखात्पापं च सुखतो यदि ।
वीतरागो मुनिर्विद्वांस्ताभ्यां युञ्ज्यान्निमित्ततः ॥ ९३ ॥

वृत्तिः—स्वस्मिन् दुःखात् ध्रुवं निश्चितं पुण्यं यदि स्यात्तस्मिन्नेवात्मनि सुखादेतोर्ध्रुवं पापं च यदि स्यात् । ततः किं स्यात् । ताभ्यां वीतरागो मुनिर्युञ्ज्याद्बद्धो भवेत् । कुतो निमित्तत्वात् ॥

अथोभयैकान्तस्तद्वयादिष्यते तत्रापि दोष एव विरोधात् । नाप्यवाच्यत्वं वचनविरोधात्—

विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।
अवाच्यतैकान्तेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ९४ ॥

वृत्तिः—सुगमम् ॥

कथं तर्हीत आह—

विशुद्धिसंक्लेशाङ्गं चेत् स्वपरस्थं सुखासुखम् ।
पुण्यपापास्रवौ युक्तौ न चेद्व्यर्थस्तवार्हतः ॥ ९५ ॥

वृत्तिः—स्व आत्मा परोऽन्यस्तयोस्तिष्ठतीति स्वपरस्थं सुखं चासुखं च

अथ कदाचिन्मनुषे न दैवान्नापि पौरुषात् ज्ञानान्नाप्यज्ञानात् किंतु ईश्वरप्रेरणादित्यस्य मतस्य निराकरणायाह—अथवा कामादीनां कर्मणश्च वैचित्र्यमनादित्वं च दर्शयितुमाह—

कामादिप्रभवश्चित्रः कर्मबन्धानुरूपतः ।
तच्च कर्म स्वहेतुभ्यो जीवास्ते शुद्ध्यशुद्धितः ॥ ९९ ॥

वृत्तिः—कामादीनां रागादीनां प्रभव उत्पादः कार्यरूपश्चित्रो नानाप्रकारः । कर्मबन्धानुरूपतः ज्ञानावरणादिकर्मणः कारणाद्भवति । तच्च कर्म ज्ञानावरणादिकं स्वहेतुभ्यो भवति कुत एतदनादिर्बन्धबन्धहेतुसन्तानो बीजांकुरवत् न पुनरीश्वरादेस्तस्यावस्तुत्वात् विरागाक्षमत्वेन । ते भगवतोऽर्हतो जीवा द्विप्रकाराः संसारिणः सन्ति । कुतः शुद्ध्यशुद्धितो भव्याभव्यशक्तेः । अत एव न सर्वेषां मोक्षः । एतेनान्यदपि मतान्तरं निराकृतं वेदितव्यम् ॥

शुद्ध्यशुद्धिस्वरूपप्रतिपादनायाह—

शुद्ध्यशुद्धी पुनः शक्ती ते पाक्यापाक्यशक्तिवत् ॥
साद्यनादी तयोर्व्यक्ती स्वभावोऽतर्कगोचरः ॥ १०० ॥

वृत्तिः— शुद्ध्यशुद्धी ये शक्ती भव्याभव्यत्वरूपे ते अनादितत्त्वार्थश्रद्धानाश्रद्धानयोग्यके कङ्केतरमुद्गपाक्यापाक्यशक्तिवत् तयोर्भव्यत्वाभव्यत्वशक्त्योर्व्यक्ती तत्त्वार्थश्रद्धानमिथ्यात्वादिपरिणत्यपरिणती साद्यनादी । कुतोऽयं शक्तिभेदोऽतर्कगोचरः स्वभावो यतः ॥

एवं तावत्प्रमाणपरतन्त्रप्रमेयविचारः कृतः । अधुना प्रमाणतत्त्वनिरूपणार्थमाह—

तत्त्वज्ञानं प्रमाणं ते युगपत्सर्वभासनम् ।
क्रमभावि च यज्ज्ञानं स्याद्वादनयसंस्कृतम् ॥ १०१ ॥

वृत्तिः—तत्त्वज्ञानं परार्थबोधः पुनरपि कथंभूतं युगपत्सर्वार्थमवभासनं इति युगपत्सर्वभासनमक्रमेण परिच्छेदात्मकमित्यर्थः तत्प्रमाणमेव । क्रमभावि च यज्ज्ञानं छद्मस्थीयं चक्षुरादिकं चकारादक्रमभावि च दीर्घशष्कुल्यादिभक्षणे सम्भवात् सर्वथासदसदेकानेकनित्यानित्यादिसकलैकान्तप्रत्यनीकानेकान्ततत्त्व-

गात् । अथ कथम्प्रकारः स्याद्वादः किंवृत्तचिद्विधिः किमो वृत्तं किं निष्पन्नं वृत्तं किंवृत्तं च तच्चिच्च किंवृत्तचित् तदेव विधिः प्रकारो यस्य कथचित् कुतश्चिदित्यादि । सप्तभङ्गाश्च ते नयाश्च तानपेक्षत इति स्यादस्ति स्यान्नास्त्यादि । हेयादेययोर्विशेषकः गुणमुख्यकल्पनया ॥

स्याद्वादकेवलज्ञानयोः कथचित्सामान्यं दर्शयन्नाह—

स्याद्वादकेवलज्ञाने सर्वतत्त्वप्रकाशने ।
भेदः साक्षादसाक्षाच्च ह्यवस्त्वन्यतमं भवेत् ॥ १०५ ॥

वृत्तिः— सर्वाणि च तानि तत्त्वानि च जीवाजीवादीनि तानि प्रकाशत इति सर्वतत्त्वप्रकाशने के ते स्याद्वादश्च केवलज्ञानं च ते द्वे प्रमाणे । तयोर्मध्येऽन्यतम परैः परिकल्पितमवस्तु भवेद्यतः कथं तयोर्भेदः साक्षात्प्रत्यक्षादसाक्षादप्रत्यक्षात् ॥

प्रमाणं चर्चितमथ को नयो नामेत्याह—

सधर्मणैव साध्यस्य साधर्म्यादविरोधतः ।
स्याद्वादप्रविभक्तार्थविशेषव्यञ्जको नयः ॥ १०६ ॥

वृत्तिः—समानो गुणो यस्य स सधर्मा तेन सधर्मणैव सपक्षेणैव एवकाराद्विपक्षनिराकरणं साध्यस्यानित्यत्वादेः शब्दस्याभिप्रेतस्याप्रसिद्धस्य । सधर्मणो भावः साधर्म्यं तस्मात्साधर्म्यात् । स्याद्वादः श्रुतज्ञानं तेन प्रविभक्तो विषयीकृतोऽर्थस्तस्य विशेषो नित्यत्वादिस्तस्यव्यञ्जकः प्रकटको द्योतको नयो युक्तितोऽर्थपरिग्रहः । इत्यनेनान्वयव्यतिरेकपक्षधर्मा उक्ताः । अविरोधादित्यनेनान्यथानुपपत्त्येकलक्षणो हेतुः प्रदर्शितः । किमुक्तं भवति— अन्तर्व्याप्तिमन्तरेण त्रिलक्षणो हेतुर्न गमक इति ॥ अथ को नयप्रमाणयोर्विशेषोऽनेकान्तप्रतिपत्तिः प्रमाणं, एकधर्मप्रतिपत्तिर्नयः ॥

तद्विषयस्य द्रव्यस्य स्वरूपप्रतिपादनार्थमाह—

नयोपनयैकान्तानां त्रिकालानां समुच्चयः ।
अविभ्राड् भावसम्बन्धो द्रव्यमेकमनेकधा ॥ १०७ ॥

वृत्तिः— नया नैगमादयःसप्त उपनयास्तद्भेदोपभेदार्थपर्यायास्तएवैकान्ताः

प्रमाणहेतुफलप्रतिपादकस्य येयं देशना कथनं परप्रतिपादनं कथं स्यात् किन्तु न संबंधेव। तथाच विशीर्णं प्रमाणादिलक्षणं धर्म। तस्मादसत्सदेकान्तात्मकं हेतुज्ञानं प्रमाणवदिति वचनस्य प्रामाण्यमेषितव्यम् ॥

पुनरपि वचोलक्षणमाह—

**वाक्स्वभावोऽन्यवागर्थप्रतिषेधनिरङ्कुशः ।**
**आह च स्वार्थसामान्यं तादृग्वाच्यं खपुष्पवत् ॥ १११ ॥**

वृत्तिः—वाचः स्वभाव आत्मीयं रूपमन्येषां वाच्यत्वेनाभिमतानां वाग्वचनं तस्या अर्थस्य प्रतिषेधो निराकरणं तस्मिन् निरङ्कुशः पदार्थानां निराकरणं करोति स्वार्थं च प्रतिपादयति अतोऽनेकान्तो, यदि पुनः सर्वथा स्वस्य ज्ञानार्थस्य बाह्यार्थस्य सामान्यं परापरव्यपोह चार्वाक आह आहोस्व-दभ्युपगमः स्यात् तादृग्वाच्यं विशेषरहितं सामान्यं खपुष्पवत् गगनकुसुमसमानमतो न किञ्चित्स्यात् ॥

ननु सामान्यमेव वचोऽर्थो यदुत विशेषे वर्तते सामान्येऽभिप्रायाभावादिति संसर्गबोधकत्वे तन्निराकरणार्थमाह—

**सामान्यवाग्विशेषे चेन्न शब्दार्थो मृषा हि सा ।**
**अभिप्रेतविशेषाप्तेः स्यात्कारः सत्यलाञ्छनः ॥ ११२ ॥**

वृत्तिः—सामान्यसम्बन्धिनी वाक् विशेषे वर्तते विशेषमाचष्टे तत्त्वार्थक्रियाभावात् नैवेदं भवतोऽभिप्रायः तर्हि शब्दस्यार्थोऽभिधेयः कुतः तादृग्भूता वाक् मृषा अलीका सा। यस्मात् शब्दस्य वाचकोऽन्यनाह घटशब्दः पटार्थस्य न कदाचिदपि प्रतिपादकः नाप्यपोहोऽन्यार्थोऽपोहो हि परव्यावृत्तिः सा च तुच्छा ततो भेदपक्षनिर्विकल्पकपक्षे न वाच्यं नापि वाचको नानुमानं नाप्यागमः सर्वाभावोऽतः स्यात्कारः स्याद्वादः सत्यलाञ्छनः सत्यभूतोऽभिप्रेतविशेषस्याप्तेर्निमित्तनिष्ठाणां प्रसिद्धेतोराश्रयणं यः सर्वदोषकल्मषातीतत्वात्।

तस्यैव स्वरूपमाह—

**विधेयमीप्सितार्थाङ्गं प्रतिषेध्याविरोधि यत् ।**
**तथैवादेयहेयत्वमिति स्याद्वादसंस्थितिः ॥ ११२ ॥**

तथाभूतास्ते च ते प्रमाणनयाश्च त एवांशवः किरणास्ते विद्यन्ते यस्य स तथाभूत इति यतिपतेर्विशेषणम् ॥

श्रीमत्समन्तभद्राचार्यस्य त्रिभुवनलब्धजयपताकस्य प्रमाणनयचक्षुषः स्याद्वादशरीरस्य देवागमाख्यायाः कृतेः संक्षेपभूतं विवरणं कृतं श्रुतविस्मरणशीलेन वसुनन्दिना जडमतिनाऽऽत्मोपकाराय ॥

समन्तभद्रदेवाय परमार्थविकल्प (ल्पि) ने ।
समन्तभद्रदेवाय नमोऽस्तु परमात्मने ॥ १ ॥
सुखाय जायते लोके वसुनन्दिसमागमः ॥
तस्मान् विसेव्यतां भव्यैर्वसुनन्दिसमागमः ॥ २ ॥

इति श्रीवसुनन्द्याचार्यकृता देवागमवृत्तिः समाप्ता ।

ॐ

# अथ समन्तभद्रस्वामिविरचित

# युक्त्यनुशासनम् ।

( १२ )

कीर्त्या महत्या भुवि वर्द्धमानं त्वां वर्द्धमानं स्तुतिगोचरत्वं ।
निनीषवः स्मो वयमद्य वीर विशीर्णदोषाशयपाशबन्धम् ॥ १ ॥
याथात्म्यमुल्लंघ्य गुणोदयाख्या लोके स्तुतिर्भूरिगुणोदधेस्ते ।
अणिष्ठमप्यंशमशक्नुवन्तो वक्तुं जिन त्वां किमिव स्तुयाम ॥ २ ॥
तथापि वैयात्यमुपेत्य भक्त्या स्तोतास्मि ते शक्त्यनुरूपवाक्यः ।
इष्टे प्रमेयेऽपि यथास्वशक्ति किन्नोत्सहन्ते पुरुषाः क्रियाभिः ॥ ३ ॥
त्वं शुद्धिशक्त्योरुदयस्य काष्ठां तुलाव्यतीतां जिन शान्तिरूपां ।
अवापिथ ब्रह्मपथस्य नेता महानितीयत्प्रतिवक्तुमीशाः ॥ ४ ॥
कालः कलिर्वा कलुषाशयो वा श्रोतुः प्रवक्तुर्वचनानयो वा ।
त्वच्छासनैकाधिपतित्वलक्ष्मीप्रभुत्वशक्तेरपवादहेतुः ॥ ५ ॥
दयादमत्यागसमाधिनिष्ठं नयप्रमाणप्रकृताञ्जसार्थं ।
अधृष्यमन्यैरखिलैः प्रवादैर्जिन त्वदीयं मतमद्वितीयं ॥ ६ ॥
अभेदभेदात्मकमर्थतत्त्वं तव स्वतन्त्रान्यतरत्खपुष्पम् ।
अवृत्तिमत्त्वात्समवायवृत्तेः संसर्गहानेः सकलार्थहानिः ॥ ७ ॥
भावेषु नित्येषु विकारहानेर्न कारकव्यापृतकार्ययुक्तिः ।
न बन्धभोगौ न च तद्विमोक्षः समन्तदोषं मतमन्यदीयं ॥ ८ ॥
अहेतुकत्वं प्रथितः स्वभावस्तस्मिन् क्रियाकारकविभ्रमः स्यात् ।
आबालसिद्धेर्विविधार्थसिद्धिर्वादान्तरं किं तदसूयतां ते ॥ ९ ॥
येषामवक्तव्यमिहात्मतत्त्वं देहादनन्यत्वपृथक्त्वक्लृप्तेः ।

